* अथ *

# नारायण कवच

* प्रारम्भः *



प्रकाशकः—

हिन्दी पुस्कालय, मथुरा।

मूल्य ≡)

श्रीगणेशायनमः ।

श्रीसरस्वत्यैनमः श्रीगुरवेनमः ।

# अथ नारायणवर्म प्रारंभ

राजोवाच ॥ययागुप्तः सहस्राक्षः सवाहान्
रिपुसैनिकान् ॥ क्रीडन्निवविनिर्जित्य
त्रिलोक्याबुभुजेश्रियम् ॥ १ ॥ भगवंस्त
न्ममाख्याहिवर्मनारायणात्मकम् यथाऽऽ
ततायिनःशत्रून्येनगुप्तोऽजयन्मृधे ॥२॥
श्रीशुकवाच ॥ वृत्तःपुरोहितस्त्वाष्ट्रोमहे

द्रायानुपच्छते ॥ नारायणाख्यं वर्मा
हतादिहैकमनाः शृणु ॥ ३ ॥ विश्वरूप
उवाच । धौतांघ्रिपाणिराचम्य स पवित्र
उदङ्मुखः कृतस्वांगकरन्यासो मंत्रा
भ्यांवाग्यतः शुचिः ॥ ४ ॥ नारायणमयं
वर्मसन्नह्येद्भयआगते ॥ पादयोर्जानुनो
रूर्वोरुदरेहृद्यथोरसि ॥ ५ ॥ मुखेशिर
स्यानुपूर्व्यादोंकारादीनिविन्यसेत् ॥ ॐ
नमोनारायणायेति विपर्ययमथापिवा

॥ ६ ॥ करन्यासंततः कुर्यात्द्वादशाक्षर-
विद्यया ॥ प्रणवादियकारांतमंगुल्य-
ङ्गुष्ठपर्वसु ॥७॥ न्यसेद्हृदयमोंकारं वि-
कारमनुमूर्द्धनि ॥ षकारंतु भ्रुवोर्मध्ये
णाकारंशिखयादिशेत् ॥८॥ वेकारंनेत्रयोर्यु-
ज्यान्नकारंसर्वसंधिषु ॥ मकारमस्त्र-
मुद्दिश्यमंत्रमूर्तिर्भवेद्बुधः ॥९॥ सवि सर्गं
फडंतंतत्सर्वदिक्षुविनिर्दिशेत् ॥ ॐ
विष्णवेनमः ॥इति॥ ॥१०॥ आत्मानंपरमं

ध्यायेद्धयेयं षटशक्तिभिर्युतम् । विद्या-
तेजस्तपोमूर्तिमिमं मंत्रमुदाहरेत् ॥ ११ ॥
हरिर्विदध्यान्मम सर्वरक्षां न्यस्तांघ्रिपद्मः
पतगेंद्रपृष्ठे ॥ दरारिचर्मा-
सिगदेषुचापपाशान् दधानोऽष्टगुणो-
ऽष्टबाहुः ॥ १२ ॥ जलेषु मां रक्षतु मत्स्य-
मूर्तिर्यादोगणेभ्यो वरुणस्य पाशात् ॥
स्थलेषु माया वटुवामनोऽव्यात् त्रिविक्र-
मः खेऽवतु विश्वरूपः ॥ १३ ॥ दुर्गेष्वट-

व्याजिमुखादिषुप्रभुः पायान्नृसिंहो
ऽसुरयूथपारिः ॥ विमुंचतोयस्यमहाट्ट
हासंदिशोविनेदुर्न्यपतंश्चगर्भाः ॥ १४ ॥
रक्षत्वसौमाऽध्वनियज्ञकल्पः स्वदंष्ट्र
योन्नीतिधरोवराहः ॥ रामोऽद्रिकूटे
ष्वथविप्रवासे सलक्ष्मणोऽव्याद्भरता
ग्रजोऽस्मान् ॥ १५ ॥ मामुग्रधर्मादखि
लात्प्रमादान्नारायणः पातुनरश्चहा
सात् ॥ दत्तस्त्वयोगादथयोगनाथः पा

याद्गुरोश:कपिलः कर्म्मबंधात्॥१६॥ स
नत्कुमारोऽवतुकामदेवाद्धयशीर्षा माँ
पथिदेवहेलनात् ॥ देवर्षिवर्यः पुरुषार्च
नांतरात्कूर्मोहरिर्मांनिरयादशेषात् ॥
॥ १७ ॥ धन्वंन्तरिर्भगवानूपात्वपथ्याद्
द्वंद्वाद्भयादृषभोनिर्जितात्मा । यज्ञश्च
लोकादवताज्जनांताद्बलोगणात् क्रो
धवशादहींद्रः ॥१८॥ द्वैपायनो भगवान
प्रबोधाद्बुद्धस्तुपाखंडगणात्प्रमादात् ॥

कल्किः कलेः कालमलात्प्रपातु धर्मावनायोरुकृतावतारः ॥ १९ ॥ मां केशवो गदया प्रातरव्याद् गोविन्द आसंगवमात्तवेणुः ॥ नारायणः प्राह्ण उदात्तशक्तिर्मध्यंदिने विष्णुररीन्द्रपाणिः ॥ २० ॥ देवोऽपराह्णे मधुहोग्रधन्वा सायं त्रिधामाऽवतु माधवो माम् । दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ॥ २१ ॥ श्रीवत्सधामाऽपररात्र ईशः प्रत्यूष ईशो

ऽसिधरोजनार्दनः ॥ दामोदरोऽव्यादनु
संध्यंप्रभाते विश्वेश्वरो भगवान्कालमू
र्तिः ॥ २२ ॥ चक्रंयुगांतानलतिग्मनेमि
भ्रमत्समंताद्भगवत्प्रयुक्तम् ॥ दंदग्धि
दंदग्ध्यरिसैन्यमाशु कक्षंयथा वातस
खोहुताशः ॥ २३ ॥ गदेशनिस्पर्श
नविस्फुलिंगे निष्पिंढिनिष्पिढ्यजि
तप्रियाऽसि ॥ कूष्मांडवैनायकयक्ष
रक्षोभूतग्रहाश्चूर्णयचूर्णयारीन् ॥ २४ ॥

त्वं यातुधानप्रमथप्रेतमातृपिशाचवि
प्रग्रहघोरदृष्टीन् ॥ दरेन्द्रविद्रावयकृष्णा
पूरितोभीमस्वनोऽरेर्हृदयानिकंपयन् ॥
॥ २५ ॥ त्वंतिग्मधारासिवरारिसैन्य
मीशप्रयुक्तोममछिंधिछिंधि ॥ चक्षूंषि
चर्मन्शतचंद्रछादयद्विषामघोनां हर
पापचक्षुषाम् ॥ २६ ॥ यन्नोभयंग्रहेभ्यो
भूत्केतुभ्योनृभ्यएवच ॥ सरीसृपेभ्यो
दंष्ट्रिभ्यस्तथा ऽहोभ्यएववा ॥ २७ ॥

सर्वाण्येतानि भगवन्नामरूपास्त्रकी
र्तनात् ॥ प्रयांतुसंक्षयंसद्योयेनः श्रेयः
प्रतीपकाः ॥ २८ ॥ गरुडोभगवांन्स्तोत्र
स्तोभश्च्छंदोमयः प्रभुः ॥ रक्षत्वशे
षकृच्छ्रेभ्योविष्वक्सेनः स्वनामभिः
॥ २९ ॥ सर्वापद्भ्योहरेर्नामरूपयाना
युधानिनः ॥ बुद्धींद्रियमनःप्राणान्पां
तुपार्षदभूषणाः ॥ ३० ॥ यथाहिभगवाने
वस्ततः सदसच्चयत ॥ सत्येनानेननः

सर्वेयांतुनाशमुपद्रवाः ॥ ३१ ॥ यथैका
त्म्यानुभावानांविकल्परहितः स्वयम्
भूषणायुधलिंगाख्याधत्ते शक्तीः स्व
मायया ॥ ३२ ॥ तेनैवसत्यमानेनसर्वज्ञो
भगवान्हरिः ॥ पातुसर्वैः स्वरूपैर्नः सदा
सर्वत्रसर्वगः ॥ ३३ ॥ विदिक्षुदिक्षूर्ध्वम
धः समंतादंतर्बहिर्भगवान्नारसिंहः ॥
प्रहापयंल्लोकभयंस्वनेन स्वतेजसाग्र
स्तसमस्ततेजः ॥ ३४ ॥ मघवानेदमा

ख्यातंवर्मनारायणात्मकम् । विजेष्य
स्यंजसायेनदंशितोऽसुरयूथपान् ॥ ३४ ॥
एतद्धारयमाणास्तुयंयंपश्यतिचक्षुषा ॥
पदावासंस्पृशेत्सद्यः साध्वसात्सविमु
च्यते ॥ ३६ ॥ नकुतश्चिद्भयं तस्य
विद्यांधारयतोभवेत् ॥ राजदस्युग्रहा
दिभ्योव्याघ्रादिभ्यश्चकर्हिचित् ॥ ३७ ॥
इमांविद्यांपुराकश्चित्कौशिको धारय
न्द्विजः ॥ योगधारणयास्वांगंजहौ

समरुधन्वानि ॥ ३८ ॥ तस्योपरिविमाने
नगंधर्वपतिरेकदा । ययौचित्ररथः स्त्री
भिर्वृतोमत्रद्विजक्षयः ॥ ३९ ॥ गगना
न्न्यपतत्सद्यः सविमानोह्यवाक्शिराः
सवालखिल्यवचनादस्थीन्यादाय वि
स्मितः प्रास्यप्राची सरस्वत्यां
स्नात्वाधामस्वमन्वगात् ॥४०॥ श्रीशुकउ
वाच ॥ यइदंश्रृणुयात्कालेयोधारयति
चादृतः ॥ तंनमस्यंतिभूतानिमुच्यते

सर्वतोभयात् ॥ ४१ ॥ एतांविद्यामधि
गतोविश्वरूपाच्छतक्रतुः ॥ त्रैलोक्य
लक्ष्मीं बुभुजे विनिर्जित्यमृधेऽसुरान्
॥ ४१ ॥ इति श्रीमद्भागवतेमहापुरा
णेऽष्टादशसाहस्र्यां संहितायांवैयास
क्यांषष्ठस्कंधे नारायणवर्मकथनं ना
माष्टमोऽध्यायः ॥ ८ ॥

॥ इति नारायण वर्म समाप्तः ॥

॥ श्रीकृष्णार्पणमस्तु ॥



इति

# नारायणकवच ।

समाप्तः

## ❀ धार्मिक पुस्तकें ❀

| | | | |
|---|---|---|---|
| सत्यनारायनव्रतकथाभा० टी० | ।।) | स्तोत्र रत्नम् | =) |
| सत्यनारायणव्रत कथा भाषा | ।) | सर्वदेव पूजा भा०टी० | ≡) |
| अनन्त कथा भा० टी० | ।।) | हनूमान चालीसा | =) |
| गीतासारसंग्रह | १।) | शिव चालीसा | =) |
| तुलसी दोहावली भा० टी० | ।।) | गर्भ गीता | =) |
| कबीर दोहावली भा० टी० | ।।) | दुर्गा चालीसा | =) |
| अर्जुन गीता | ।) | राम चालीसा | –) |
| ज्ञानमाला | ।) | बजरङ्गबाण | –) |
| भजन रामायण | ≡) | नर्मदाष्टक | –) |
| भजन मीराबाई | ≡) | इन्द्राक्षी स्तोत्र | –) |
| सनेह लीला | १) | पंचदेवता पूजा विधि | =) |
| ब्रह्मानन्द भजन माला | १।।=) | सन्ध्या यजुर्वेदी | ≡) |
| गड़बड़ रामायण | ।=) | वैदिक संध्या | =) |
| रैदास रामायण | ।।) | शिव महीम्न भा० टी० | ।) |
| भक्तमाल केवल भाषा | ४) | शिव महीम्न मूल | =) |
| लावनी ब्रह्मज्ञान बड़ी | ३।।) | प्राणायाम विधि | ।) |
| गोपाल सहस्रनाम भा० टी० | १) | सीताराम भजन | –) |
| " तथा मूल गुटका | ।=) | नारदीय भजन संग्रह | ।=) |
| विष्णुसहस्रनाम भा० टी० | ।।।) | चाणक्य नीति भा० टी० | ।।।) |
| " मूल गुटका | ।=) | विदुर नीति भा० टी० | १।।) |
| शिखा यज्ञोपवीत मीमांसा | =) | योग वाशिष्ट दो प्रकरण | २।।) |
| दुर्गा सप्तशती भा० टी० | २) | सनातन भजन दीपिका | १।।) |

एक हजार अनूठी पुस्तकों का सूची पत्र मुफ्त मगावें।

बी० पी० द्वारा पुस्तकें मंगाने का पता–

# हिन्दी पुस्तकालय, मथुरा।

मुद्रक–बाबूसोहनलाल गुप्ता, हिन्दी पुस्तकालय प्रेस मथुरा।